न्यासः

अंगन्यासः
ओं ओं पादयोः नमः ।
ओं नं जानुनोः नमः ।
ओं मों ऊर्वोः नमः ।
ओं नां उदरे नमः ।
ओं रां हृदि नमः ।
ओं यं उरसि नमः ।
ओं णां मुखे नमः ।
ओं यं शिरसे नमः ।

करन्यासः
ओं ओं दक्षिणतर्जन्याम् नमः ।
ओं नं दक्षिणमध्यमायाम् नमः ।
ओं मों दक्षिणानामिकायाम् नमः ।
ओं भं दक्षिणकनिष्ठिकायाम् नमः ।
ओं गं वामकनिष्ठिकायाम् नमः ।
ओं वं वामानिकायाम् नमः ।
ओं तें वाममध्यमायाम् नमः ।
ओं वां वामतर्जन्याम् नमः ।
ओं सुं दक्षिणांगुष्ठोर्ध्वपर्वणि नमः ।
ओं दें दक्षिणांगुष्ठाधः पर्वणि नमः ।
ओं वां वामांगुष्ठोर्ध्वपर्वणि नमः ।
ओं यं वामांगुष्ठाधः पर्वणि नमः ।

विष्णुषडक्षरन्यासः
ओं ओं हृदये नमः ।

ओं विं मूर्ध्नै नमः ।
ओं षं भ्रुर्वोर्मध्ये नमः ।
ओं णं शिखायाम् नमः ।
ओं वें नेत्रयोः नमः ।
ओं नं सर्वसंधिषु नमः ।
ओं मः प्राच्याम् अस्त्राय फट् ।
ओं मः आग्नेय्याम् अस्त्राय फट् ।
ओं मः दक्षिणस्याम् अस्त्राय फट् ।
ओं मः नैऋत्ये अस्त्राय फट् ।
ओं मः प्रतीच्याम् अस्त्राय फट् ।
ओं मः वायव्ये अस्त्राय फट् ।
ओं मः उदीच्याम् अस्त्राय फट् ।
ओं मः ऐशान्याम् अस्त्राय फट् ।
ओं मः ऊर्ध्वायाम् अस्त्राय फट् ।
ओं मः अधरायाम् अस्त्राय फट् ।

श्री हरिः

## अथ श्रीनारायणवर्म

॥ राजोवाच ॥

यया गुप्तः सहस्त्राक्षः सवाहान् रिपुसैनिकान् ।
क्रीडन्निव विनिर्जित्य त्रिलोक्या बुभुजे श्रियम् ॥ १ ॥

भगवंस्तन्ममाख्याहि वर्म नारायणात्मकम् ।
यथास्स्ततायिनः शत्रून् येन गुप्तोस्जयन्मृधे ॥ २ ॥

॥ श्रीशुक उवाच ॥

वृतः पुरोहितोस्त्वाष्ट्रो महेंद्रायानुपृच्छते ।
नारायणाख्यं वर्माह तदिहैकमनाः शृणु ॥ ३ ॥

॥ विश्वरूप उवाच ॥

धौतांघ्रिपाणिराचम्य सपवित्र उदं मुखः ।
कृतस्वांगकरन्यासो मंत्राभ्यां वाग्यतः शुचिः ॥ ४ ॥

नारायणमयं वर्म सन्नह्येद् भय आगते ।
दैवभूतात्मकर्मभ्यो नारायनमयः पुमान् ॥ ५ ॥

पादयोर्जानुनोरूर्वोरूदरे हृद्यथोरसि ।
मुखे शिरस्यानुपूर्व्यादोंकारादीनि विन्यसेत् ॥ ६ ॥

ओं नमो नारायणायेति विपर्ययमथापि वा
करन्यासं ततः कुर्याद्द्वादशाक्षरविद्यया ॥ ७ ॥

प्रणवादियकारंतमंगुल्यंगुष्ठपर्वसु ।
न्यसेद् हृदय ओंकारं विकारमनु मूर्धनि ॥ ८ ॥

षकारं तु भ्रुवोर्मध्ये णकारं शिखया दिशेत् ।
वेकारं नेत्रयोर्युंज्यान्नकारं सर्वसंधिषु ॥ ९ ॥

मकारमस्त्रमुद्दिश्य मंत्रमूर्तिर्भवेद् बुधः ।
सविसर्गं फडंतं तत् सर्वदिक्षु विनिर्दिशेत् ॥ १० ॥

ओं विष्णवे नमः

इत्यात्मानं परमं ध्यायेदध्येयं षट् शक्तिभिर्युतम् ।
विद्यातेजस्तपोमूर्तिमिमं मंत्रमुदाहरेत ॥ ११ ॥

ओं हरिर्विदध्यान्मम सर्वरक्षां न्यस्तांघ्रिपद्मः पतगेंद्रपृष्ठे ।
दरारिचर्मासिगदेषुचापाशान् दधानोऽष्टगुणोऽष्टबाहुः ॥ १२ ॥

जलेषु मां रक्षतु मत्स्यमूर्तिर्यादोगणेभ्यो वरूणस्य पाशात् ।
स्थले च मायावटुवामनोऽव्यात् त्रिविक्रमः खेऽवतु विश्वरूपः ॥ १३ ॥

दुर्गेष्वटव्याजिमुखादिषु प्रभुः पायान्नृसिंहोऽसुरयुथपारिः ।
विमुंचतो यस्य महाट्टहासं दिशो विनेदुर्न्यपतंश्च गर्भाः ॥ १४ ॥

रक्षत्वसौ माऽध्वनि यज्ञकल्पः स्वदंष्ट्रयोन्नीतधरो वराहः ।
रामोऽद्रिकूटेष्वथ विप्रवासे सलक्ष्मणोऽव्याद्भरताग्रजो माम् ॥ १५ ॥

मामुग्रधर्मा निखिलप्रमादान्नारायणः पातु नरश्च हासात् ।
दत्तस्त्वयोगादथ योगनाथः पायाद्गुणेशः कपिलः कर्मबंधात् ॥ १६ ॥

सनत्कुमारोऽवतु कामदेवाद्धयशीर्षो मां पथि देवहेलनात् ।
देवर्षिवर्यः पुरुषांतरार्चनात् कूर्मो हरिर्मां निरयादशेषात् ॥ १७ ॥

धन्वंतरिर्भगवान् पात्वपथ्याद्द्वंद्वाद्भयादृषभो निर्जितात्मा ।
यज्ञश्च लोकादुत तत्कृतान्नो बलो गणात् क्रोधवशादहींद्रः ॥ १८ ॥

द्वैपायनो भगवानप्रबोधाद्बुद्धस्तु पाखंडगणात् प्रमादात् ।
कल्की कलेः कालमलात् प्रपातु धर्मावनायोरूकृतावतारः ॥ १९ ॥

मां केशवो गदया प्रातरव्याद् गोविंद आसंगव आत्तवेणुः ।
नारायणः पातु सदाऽऽत्तशक्तिर्मध्यंदिने विष्णुररींद्रपाणिः ॥ २० ॥

देवोऽपराह्णे मधुहोग्रधन्वा सायं त्रिधामाऽवतु माधवो माम् ।
दोषे हृषीकेश उतार्धरात्रे निशीथ एकोऽवतु पद्मनाभः ॥ २१ ॥

श्रीवत्सलक्ष्माऽपररात्र ईशः प्रत्यूष ईशोऽसिधरो जनार्दनः ।
दामोदरोऽव्यादनुसंध्यं प्रभाते विष्णुः श्रीमान् भगवान् कालमूर्तिः ॥ २२ ॥

चक्रं युगांतानलतिग्मनेमि भ्रमत् समंताद् भगवत्प्रयुक्तम् ।
दंदग्धि दंदग्ध्यरिसैन्यमाशु कक्षं यथा वायुसखो हुताशः ॥ २३ ॥

गदेऽशनिस्पर्शनविस्फुलिंगे निष्पिंढि निष्पिंढ्यजितप्रियाऽसि ।
कूष्मांडवैनायकयक्षरक्षोभूतग्रहांश्चूर्णय चूर्णयारीन् ॥ २४ ॥

त्वं यातुधानप्रमथप्रेतमातृपिशाचविप्रग्रहघोरदृष्टीन् ।
दरेंद्र विद्रावय कृष्णपूरितो भीमस्वनोऽरीन् हृदयानि कंपयन् ॥ २५ ॥

त्वं तिग्मधाराऽसि वरारिसैन्यमीशप्रयुक्तो मम छिंधि छिंधि ।
चक्षूंषि चर्मन् शतचंद्र छादय द्विषामघं नो हर पापचक्षुषाम् ॥ २६ ॥

यन्नो भयं ग्रहेभ्योऽभूत् केतुभ्यो नृभ्य एव च ।
सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्योऽघेभ्य एव वा ॥ २७ ॥

सर्वाण्येतानि भगवन्नामरूपास्त्रकीर्तनात् ।
प्रयांतु संक्षयं सद्यो येऽन्ये श्रेयः प्रतीपकाः ॥ २८ ॥

गरूडो भगवान् स्तोत्रस्तोमच्छंदोमयः प्रभुः ।
रक्षत्वशेषकृच्छ्रेभ्यो विष्वक्सेनः स्वनामभिः ॥ २९ ॥

सर्वापद्भ्यो हरेर्नामरूपयानायुधानि नः ।
बुद्धिंद्रियमनः प्राणान् पांतु पार्षदभूषणाः ॥ ३० ॥

यथा हि भगवानेव वस्तुतः सद्सच्च यत् ।
सत्येन तेन नः सर्वे यांतु नाशमुपाद्रवाः ॥ ३१ ॥

यथैकात्म्यानुभावानां विकल्परहितः स्वयम् ।
भूषणायुद्धलिंगाख्या धत्ते शक्तीः स्वमायया ॥ ३२ ॥

तेनैव सत्यमानेन सर्वज्ञो भगवान् हरिः ।
पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः ॥ ३३ ॥

विदिक्षु दिक्षूर्ध्वमधः समंतादंतर्बहिर्भगवान् नारसिंहः ।
प्रहापयन् लोकभयं स्वनेन ग्रस्तसमस्ततेजाः ॥ ३४ ॥

मघवन्निदमाख्यातं वर्म नारयणात्मकम् ।
विजेष्यस्यंजसा येन दंशितोऽसुरयूथपान् ॥ ३५ ॥

एतद्धारयमाणस्तु यं यं पश्यति चक्षुषा ।
पदा वा संस्पृशेत् सद्यः साध्वसात् स विमुच्यते ॥ ३६ ॥

न कुतश्चिद्भयं तस्य विद्यां धारयतो भवेत् ।
राजदस्युग्रहादिभ्यो व्याध्यादिभ्यश्च कर्हिचित् ॥ ३७ ॥

इमां विद्यां पुरा कश्चित् कौशिको धारयन् द्विजः ।
योगधारणया स्वांगं जहौ स मरुधन्वनि ॥ ३८ ॥

तस्योपरि विमानेन गंधर्वपतिरेकदा ।
ययौ चित्ररथः स्त्रीभिर्वृतो यत्र द्विजक्षयः ॥ ३९ ॥

सांगनो न्यपतत् सद्यः सविमानो ह्यवाक् शिराः।
विद्यामिमां धारयतो मृतस्यास्थिविलंघनात् ॥ ४० ॥

स वालखिल्यवचनादस्थीन्यादाय विस्मितः ।
प्रास्य प्राचीसरस्वत्यां स्नात्वा धाम स्वमन्वगात् ॥ ४१ ॥

य इदं शृणुयात् काले यो धारयति चादृतः ।
तं नमस्यंति भूतानि मुच्यते सर्वतो भयात् ॥ ४२ ॥

॥श्रीशुक उवाच॥

एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुः ।
त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य ऋधेऽसुरान् ॥ ४३ ॥

॥ इति श्रीमद्भागवते षष्ठस्कंधे नारायणवर्मोपदेशः ॥